**अग्निर् ज्योतिर् अहः शुक्लः षण्मासा उत्तरायणम्।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्म-विदो जनाः।।२४।।**

**धूमो रात्रिस् तथा कृष्णः षण्मासा दक्षिणायनम्।**
**तत्र चान्द्रमसं ज्योतिर् योगी प्राप्य निवर्तते।।२५।।**

**शुक्ल-कृष्णे गती ह्येते जगतः शाश्वते मते।**
**एकया यात्यनावृत्तिम् अन्ययावर्तते पुनः।।२६।।**

**नैते सृती पार्थ जानन् योगी मुह्यति कश्चन।**
**तस्मात् सर्वेषु कालेषु योग-युक्तो भवार्जुन।।२७।।**

**वेदेषु यज्ञेषु तपःसु चैव,**
**दानेषु यत् पुण्य-फलं प्रदिष्टम्।**
**अत्येति तत् सर्वम् इदं विदित्वा,**
**योगी परं स्थानम् उपैति चाद्यम्।।२८ ।।**

**आदितः ३३७।।**

**ॐ तत् सद् इति श्रीमद्भगवद् गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अक्षरब्रह्मयोगो नामाष्टमोऽध्यायः।।८।।**

## अध्याय नौ

# राजविद्या-राजगुह्य-योग

## परम गुह्य ज्ञान

### श्रीभगवान् उवाच

इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे।
ज्ञानं विज्ञान-सहितं यज् ज्ञात्वा मोक्ष्यसेऽशुभात्।।१।।

राजविद्या राजगुह्यं पवित्रम् इदम् उत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुम् अव्ययम्।।२।।

अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप।
अप्राप्य मां निवर्तन्ते मृत्यु-संसार-वर्त्मनि।।३।।

मया ततम् इदं सर्वं जगद् अव्यक्त-मूर्तिना।
मत्स्थानि सर्व-भूतानि न चाहं तेष्ववस्थितः।।४।।

न च मत्स्थानि भूतानि पश्य मे योगम् ऐश्वरम्।
भूतभृन् न च भूतस्थो ममात्मा भूतभावनः।।५।।

यथाकाश-स्थितो नित्यं वायुः सर्वत्रगो महान्।
तथा सर्वाणि भूतानि मत्स्थानीत्युप-धारय।।६।।

सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम्।
कल्पक्षये पुनस् तानि कल्पादौ विसृजाम्यहम्।।७।।

प्रकृतिं स्वाम् अवष्टभ्य विसृजामि पुनः पुनः।
भूत-ग्रामम् इदं कृत्स्नम् अवशं प्रकृतेर् वशात्।।८।।

न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।
उदासीन-वद् आसीनम् असक्तं तेषु कर्मसु।।९।।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद् विपरिवर्तते।।१०।।

अवजानन्ति मां मूढा मानुषीं तनुम् आश्रितम्।
परं भावम् अजानन्तो मम भूतमहेश्वरम्।।११।।

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीम् आसुरीं चैव प्रकृतिं मोहिनीं श्रिताः।।१२।।

महात्मानस् तु मां पार्थ दैवीं प्रकृतिम् आश्रिताः।
भजन्त्यनन्य-मनसो ज्ञात्वा भूतादिम् अव्ययम्।।१३।।

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः।
नमस्यन्तश् च मां भक्त्या नित्य-युक्ता उपासते।।१४।।

ज्ञानयज्ञेन चाप्यन्ये यजन्तो माम् उपासते।
एकत्वेन पृथक्त्वेन बहुधा विश्वतो-मुखम्।।१५।।

अहं क्रतुर् अहं यज्ञः स्वधाहम् अहम् औषधम्।
मन्त्रोऽहम् अहम् एवाज्यम् अहम् अग्निर् अहं हुतम्।।१६।।

पिताहम् अस्य जगतो माता धाता पितामहः।
वेद्यं पवित्रम् ओङ्कार ऋक् साम यजुरेव च।।१७।।

**गतिर् भर्ता प्रभुः साक्षी निवासः शरणं सुहृत्।**
**प्रभवः प्रलयः स्थानं निधानं बीजम् अव्ययम्।।१८।।**

**तपाम्यहम् अहं वर्षं निगृह्णाम्युत्सृजामि च।**
**अमृतं चैव मृत्युश्च सद् असच् चाहम् अर्जुन।।१९।।**

**त्रैविद्या मां सोमपाः पूतपापा,**
**यज्ञैर् इष्ट्वा स्वर्गतिं प्रार्थयन्ते।**
**ते पुण्यम् आसाद्य सुरेन्द्र-लोकम्,**
**अश्नन्ति दिव्यान् दिवि देवभोगान्।।२०।।**

**ते तं भुक्त्वा स्वर्गलोकं विशालं,**
**क्षीणे पुण्ये मर्त्यलोकं विशन्ति।**
**एवं त्रयीधर्मम् अनुप्रपन्ना,**
**गतागतं कामकामा लभन्ते।।२१।।**

**अनन्याश् चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्।।२२।।**

**येऽप्यन्य-देवता भक्ता यजन्ते श्रद्धयान्विताः।**
**तेऽपि माम् एव कौन्तेय यजन्त्यविधि-पूर्वकम्।।२३।।**

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।**
**न तु माम् अभिजानन्ति तत्त्वेनातश् च्यवन्ति ते।।२४।।**

**यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः।**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम्।।२५।।**

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।**

तदहं भक्त्युपहृतम् अश्नामि प्रयतात्मनः।।२६।।

यत् करोषि यद् अश्नासि यज् जुहोषि ददासि यत्।
यत् तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम्।।२७।।

शुभाशुभ-फलैर् एवं मोक्ष्यसे कर्मबन्धनैः।
संन्यास-योग-युक्तात्मा वियुक्तो माम् उपैष्यसि।।२८।।

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम्।।२९।।

अपि चेत् सुदुराचारो भजते माम् अनन्यभाक्।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः।।३०।।

क्षिप्रं भवति धर्मात्मा शश्वच् छान्तिं निगच्छति।
कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति।।३१।।

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः।
स्त्रियो वैश्यास् तथा शूद्रास् तेऽपि यान्ति परां गतिम्।।३२।।

किं पुनर् ब्राह्मणाः पुण्या भक्ता राजर्षयस् तथा।
अनित्यम् असुखं लोकम् इमं प्राप्य भजस्व माम्।।३३।।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
माम् एवैष्यसि युक्त्वैवम् आत्मानं मत्परायणः।।३४।।

आदितः ३७१।।

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः।।९।।

# अध्याय दस

# विभूति योग

## श्रीभगवान् का ऐश्वर्य

### श्रीभगवान् उवाच

भूय एव महाबाहो शृणु मे परमं वचः।
यत् तेऽहं प्रीयमाणाय वक्ष्यामि हित-काम्यया।।१।।

न मे विदुः सुरगणाः प्रभवं न महर्षयः।
अहम् आदिर् हि देवानां महर्षीणां च सर्वशः।।२।।

यो माम् अजम् अनादिं च वेत्ति लोक-महेश्वरम्।
असम्मूढः स मर्त्येषु सर्वपापैः प्रमुच्यते।।३।।

बुद्धिर् ज्ञानम् असम्मोहः क्षमा सत्यं दमः शमः।
सुखं दुःखं भवोऽभावो भयं चाभयम् एव च।।४।।

अहिंसा समता तुष्टिस् तपो दानं यशोऽयशः।
भवन्ति भावा भूतानां मत्त एव पृथग्-विधाः।।५।।

महर्षयः सप्त पूर्वे चत्वारो मनवस् तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः।।६।।

**एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।**
**सोऽविकल्पेन[१] योगेन युज्यते नात्र संशयः।।७।।**

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते।**
**इति मत्वा भजन्ते मां बुधा भाव-समन्विताः।।८।।**

**मच्चित्ता मद्गत-प्राणा बोधयन्तः परस्परम्।**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च।।९।।**

**तेषां सतत-युक्तानां भजतां प्रीतिपूर्वकम्।**
**ददामि बुद्धियोगं तं येन माम् उपयान्ति ते।।१०।।**

**तेषाम् एवानुकम्पार्थम् अहम् अज्ञानजं तमः।**
**नाशयाम्यात्म-भावस्थो ज्ञानदीपेन भास्वता।।११।।**

## अर्जुन उवाच

**परं ब्रह्म परं धाम पवित्रं परमं भवान्।**
**पुरुषं शाश्वतं दिव्यम् आदिदेवम् अजं विभुम्।।१२।।**

**आहुस् त्वाम् ऋषयः सर्वे देवर्षिर् नारदस् तथा।**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे।।१३।।**

**सर्वम् एतद् ऋतं मन्ये यन्मां वदसि केशव।**
**न हि ते भगवन् व्यक्तिं विदुर् देवा न दानवाः।।१४।।**

**स्वयम् एवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम।**
**भूतभावन भूतेश देवदेव जगत्पते।।१५।।**

---

१. पा० भे०-विकम्पेन।

वक्तुम् अर्हस्यशेषेण दिव्या ह्यात्म-विभूतयः।
याभिर् विभूतिभिर् लोकान् इमांस् त्वं व्याप्य तिष्ठसि।।१६।।

कथं विद्याम् अहं योगिंस् त्वां सदा परिचिन्तयन्।
केषु केषु च भावेषु चिन्त्योऽसि भगवन् मया।।१७।।

विस्तरेणात्मनो योगं विभूतिं च जनार्दन।
भूयः कथय तृप्तिर् हि शृण्वतो नास्ति मेऽमृतम्।।१८।।

## श्रीभगवान् उवाच

हन्त ते कथयिष्यामि दिव्या ह्यात्म-विभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे।।१९।।

अहम् आत्मा गुडाकेश सर्व-भूताशय-स्थितः।
अहम् आदिश् च मध्यं च भूतानाम् अन्त एव च।।२०।।

आदित्यानाम् अहं विष्णुर् ज्योतिषां रविर् अंशुमान्।
मरीचिर् मरुताम् अस्मि नक्षत्राणाम् अहं शशी।।२१।।

वेदानां सामवेदोऽस्मि देवानाम् अस्मि वासवः।
इन्द्रियाणां मनश् चास्मि भूतानाम् अस्मि चेतना।।२२।।

रुद्राणां शङ्करश् चास्मि वित्तेशो यक्षरक्षसाम्।
वसूनां पावकश् चास्मि मेरुः शिखरिणाम् अहम्।।२३।।

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।
सेनानीनाम् अहं स्कन्दः सरसाम् अस्मि सागरः।।२४।।

महर्षीणां भृगुर् अहं गिराम् अस्म्येकम् अक्षरम्।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः।।२५।।

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः।**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः।।२६।।**

**उच्चैःश्रवसम् अश्वानां विद्धि माम् अमृतोद्भवम्।**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम्।।२७।।**

**आयुधानाम् अहं वज्रं धेनूनाम् अस्मि कामधुक्।**
**प्रजनश् चास्मि कन्दर्पः सर्पाणाम् अस्मि वासुकिः।।२८।।**

**अनन्तश् चास्मि नागानां वरुणो यादसाम् अहम्।**
**पितृणाम् अर्यमा चास्मि यमः संयमताम् अहम्।।२९।।**

**प्रह्लादश् चास्मि दैत्यानां कालः कलयताम् अहम्।**
**मृगाणां च मृगेन्द्रोऽहम् वैनतेयश् च पक्षिणाम्।।३०।।**

**पवनः पवताम् अस्मि रामः शस्त्रभृताम् अहम्।**
**झषाणां मकरश् चास्मि स्रोतसाम् अस्मि जाह्नवी।।३१।।**

**सर्गाणाम् आदिर् अन्तश्च मध्यं चैवाहम् अर्जुन।**
**अध्यात्म-विद्या विद्यानां वादः प्रवदताम् अहम्।।३२।।**

**अक्षराणाम् अकारोऽस्मि द्वन्द्वः सामासिकस्य च।**
**अहम् एवाक्षयः कालो धाताहं विश्वतोमुखः।।३३।।**

**मृत्युः सर्वहरश् चाहम् उद्भवश् च भविष्यताम्।**
**कीर्तिः श्रीर् वाक् च नारीणां स्मृतिर् मेधा धृतिः क्षमा।।३४।।**

**बृहत्साम तथा साम्नां गायत्री छन्दसाम् अहम्।**
**मासानां मार्गशीर्षोऽहम् ऋतूनां कुसुमाकरः।।३५।।**

द्यूतं छलयताम् अस्मि तेजस् तेजस्विनाम् अहम्।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववताम् अहम्।।३६।।

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः।
मुनीनाम् अप्यहं व्यासः कवीनाम् उशना कविः।।३७।।

दण्डो दमयताम् अस्मि नीतिर् अस्मि जिगीषताम्।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवताम् अहम्।।३८।।

यच् चापि सर्वभूतानां बीजं तद् अहम् अर्जुन।
न तद् अस्ति विना यत् स्यान् मया भूतं चराचरम्।।३९।।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप।
एष तूद्देशतः प्रोक्तो विभूतेर् विस्तरो मया।।४०।।

यद् यद् विभूतिमत् सत्त्वं श्रीमद् ऊर्जितम् एव वा।
तद् तद् एवावगच्छ त्वं मम तेजोंऽश-सम्भवम्।।४१।।

अथवा बहुनैतेन किं ज्ञातेन तवार्जुन।
विष्टभ्याहम् इदं कृत्स्नम् एकांशेन स्थितो जगत्।।४२।।

आदितः ४१३।।

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः।।१०।।

# अध्याय ग्यारह
# विश्वरूपदर्शनयोग

## विराटरूप

### अर्जुन उवाच

मदनुग्रहाय परमं गुह्यम् अध्यात्म-संज्ञितम्।
यत् त्वयोक्तं वचस् तेन मोहोऽयं विगतो मम।।१।।

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया।
त्वत्तः कमलपत्राक्ष माहात्म्यम् अपि चाव्ययम्।।२।।

एवम् एतद् यथात्थ त्वम् आत्मानं परमेश्वर।
द्रष्टुम् इच्छामि ते रूपम् ऐश्वरम् पुरुषोत्तम।।३।।

मन्यसे यदि तच् छक्यं मया द्रष्टुम् इति प्रभो।
योगेश्वर ततो मे त्वं दर्शयात्मानम् अव्ययम्।।४।।

### श्रीभगवान् उवाच

पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः।
नानाविधानि दिव्यानि नाना-वर्णाकृतीनि च।।५।।

पश्यादित्यान् वसून् रुद्रान् अश्विनौ मरुतस् तथा।
बहून्यदृष्ट-पूर्वाणि पश्याश्चर्याणि भारत।।६।।

**इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्।**
**मम देहे गुडाकेश यच्चान्यद् द्रष्टुम् इच्छसि।।७।।**

**न तु मां शक्यसे द्रष्टुम् अनेनैव स्वचक्षुषा।**
**दिव्यं ददामि ते चक्षुः पश्य मे योगम् ऐश्वरम्।।८।।**

## सञ्जय उवाच

**एवम् उक्त्वा ततो राजन् महायोगेश्वरो हरिः।**
**दर्शयामास पार्थाय परमं रूपम् ऐश्वरम्।।९।।**

**अनेक-वक्त्र-नयनम् अनेकाद्भुत-दर्शनम्।**
**अनेक-दिव्याभरणं दिव्यानेकोद्यतायुधम्।।१०।।**

**दिव्य-माल्याम्बर-धरं दिव्य-गन्धानुलेपनम्।**
**सर्वाश्चर्य-मयं देवम् अनन्तं विश्वतोमुखम्।।११।।**

**दिवि सूर्यसहस्रस्य भवेद् युगपदुत्थिता।**
**यदि भाः सदृशी सा स्याद् भासस्तस्य महात्मनः।।१२।।**

**तत्रैकस्थं जगत् कृत्स्नं प्रविभक्तम् अनेकधा।**
**अपश्यद् देवदेवस्य शरीरे पाण्डवस् तदा।।१३।।**

**ततः स विस्मयाविष्टो हृष्टरोमा धनञ्जयः।**
**प्रणम्य शिरसा देवं कृताञ्जलिर् अभाषत।।१४।।**

## अर्जुन उवाच

**पश्यामि देवांस् तव देव देहे,**

**सर्वांस् तथा भूतविशेष-सङ्घान्।**
**ब्रह्माणम् ईशं कमलासनस्थम्,**
**ऋषींश् च सर्वान् उरगांश्च दिव्यान्।।१५।।**

**अनेक-बाहूदर-वक्त्र-नेत्रं,**
**पश्यामि त्वां सर्वतोऽनन्तरूपम्।**
**नान्तं न मध्यं न पुनस् तवादिं,**
**पश्यामि विश्वेश्वर विश्वरूप।।१६।।**

**किरीटिनं गदिनं चक्रिणं च,**
**तेजोराशिं सर्वतो दीप्तिमन्तम्।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्,**
**दीप्तानलार्क-द्युतिम् अप्रमेयम्।।१७।।**

**त्वम् अक्षरं परमं वेदितव्यं,**
**त्वम् अस्य विश्वस्य परं निधानम्।**
**त्वम् अव्ययः शाश्वत-धर्म-गोप्ता,**
**सनातनस् त्वं पुरुषो मतो मे।।१८।।**

**अनादि-मध्यान्तम् अनन्त-वीर्यम्,**
**अनन्त-बाहुं शशि-सूर्य-नेत्रम्।**
**पश्यामि त्वां दीप्त-हुताश-वक्त्रं,**
**स्वतेजसा विश्वम् इदं तपन्तम्।।१९।।**

**द्यावापृथिव्योर् इदम् अन्तरं हि,**
**व्याप्तं त्वयैकेन दिशश्च सर्वाः।**

**दृष्ट्वाद्भुतं रूपम् उग्रम् तवेदं,**
**लोकत्रयं प्रव्यथितं महात्मन्।।२०।।**

**अमी हि त्वां सुरसङ्घा विशन्ति,**
**केचिद् भीताः प्राञ्जलयो गृणन्ति।**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः,**
**स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः।।२१।।**

**रुद्रादित्या वसवो ये च साध्या,**
**विश्वेऽश्विनौ मरुतश् चोष्मपाश्च।**
**गन्धर्व-यक्षासुर-सिद्ध-सङ्घा,**
**वीक्षन्ते त्वां विस्मिताश् चैव सर्वे।।२२।।**

**रूपं महत् ते बहुवक्त्र-नेत्रं,**
**महाबाहो बहु-बाहूरु-पादम्।**
**बहूदरं बहु-दंष्ट्रा-करालं,**
**दृष्ट्वा लोकाः प्रव्यथितास् तथाहम्।।२३।।**

**नभः स्पृशं दीप्तम् अनेकवर्णं,**
**व्यात्ताननं दीप्त-विशाल-नेत्रम्।**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा,**
**धृतिं न विन्दामि शमं च विष्णो।।२४।।**

**दंष्ट्रा-करालानि च ते मुखानि,**
**दृष्ट्वैव कालानल-सन्निभानि।**
**दिशो न जाने न लभे च शर्म,**
**प्रसीद देवेश जगन्निवास।।२५।।**

**अमी च त्वां धृतराष्ट्रस्य पुत्राः,**
**सर्वे सहैवावनिपाल-सङ्घैः।**
**भीष्मो द्रोणः सूतपुत्रस् तथासौ,**
**सहास्मदीयैर् अपि योधमुख्यैः।।२६।।**

**वक्त्राणि ते त्वरमाणा विशन्ति,**
**दंष्ट्रा-करालानि भयानकानि।**
**केचिद् विलग्ना दशनान्तरेषु,**
**सन्दृश्यन्ते चूर्णितैर् उत्तमाङ्गैः।।२७।।**

**यथा नदीनां बहवोऽम्बुवेगाः**
**समुद्रम् एवाभिमुखा द्रवन्ति।**
**तथा तवामी नरलोकवीरा,**
**विशन्ति वक्त्राण्यभि-विज्वलन्ति।।२८।।**

**यथा प्रदीप्तं ज्वलनं पतङ्गा,**
**विशन्ति नाशाय समृद्धवेगाः।**
**तथैव नाशाय विशन्ति लोकास्,**
**तवापि वक्त्राणि समृद्धवेगाः।।२९।।**

**लेलिह्यसे ग्रसमानः समन्ताल्,**
**लोकान् समग्रान् वदनैर् ज्वलद्भिः।**
**तेजोभिर् आपूर्य जगत् समग्रं,**
**भासस् तवोग्राः प्रतपन्ति विष्णो।।३०।।**

**आख्याहि मे को भवान् उग्ररूपो,**

नमोऽस्तु ते देववर प्रसीद।
विज्ञातुम् इच्छामि भवन्तम् आद्यं,
न हि प्रजानामि तव प्रवृत्तिम्।।३१।।

## श्रीभगवान् उवाच

कालोऽस्मि लोकक्षय-कृत्-प्रवृद्धो,
लोकान् समाहर्तुम् इह प्रवृत्तः।
ऋतेऽपि त्वां न भविष्यन्ति सर्वे,
येऽवस्थिताः प्रत्यनीकेषु योधाः।।३२।।

तस्मात् त्वम् उत्तिष्ठ यशो लभस्व,
जित्वा शत्रून् भुङ्क्ष्व राज्यं समृद्धम्।
मयैवैते निहताः पूर्वम् एव,
निमित्तमात्रं भव सव्यसाचिन्।।३३।।

द्रोणं च भीष्मं च जयद्रथं च,
कर्णं तथान्यान् अपि योधवीरान्।
मया हतांस् त्वं जहि मा व्यथिष्ठा,
युध्यस्व जेतासि रणे सपत्नान्।।३४।।

## सञ्जय उवाच

एतच् छ्रुत्वा वचनं केशवस्य,
कृताञ्जलिर् वेपमानः किरीटी।
नमस्कृत्वा भूय एवाह कृष्णं,
सगद्गदं भीतभीतः प्रणम्य।।३५।।

## अर्जुन उवाच

स्थाने हृषीकेश तव प्रकीर्त्या,
जगत् प्रहृष्यत्यनु-रज्यते च।
रक्षांसि भीतानि दिशो द्रवन्ति,
सर्वे नमस्यन्ति च सिद्धसङ्घाः।।३६।।

कस्माच् च ते न नमेरन् महात्मन्,
गरीयसे ब्रह्मणोऽप्यादि-कर्त्रे।
अनन्त देवेश जगन्निवास,
त्वम् अक्षरं सद्-असत्-तत्परं यत्।।३७।।

त्वम् आदिदेवः पुरुषः पुराणस्,
त्वम् अस्य विश्वस्य परं निधानम्।
वेत्तासि वेद्यं च परं च धाम,
त्वया ततं विश्वम् अनन्तरूप।।३८।।

वायुर् यमोऽग्निर् वरुणः शशाङ्कः,
प्रजापतिस् त्वं प्रपितामहश्च।
नमो नमस्तेऽस्तु सहस्रकृत्वः,
पुनश्च भूयोऽपि नमो नमस्ते।।३९।।

नमः पुरस्ताद् अथ पृष्ठतस् ते,
नमोऽस्तु ते सर्वत एव सर्व।
अनन्त-वीर्यामित-विक्रमस् त्वं,
सर्वं समाप्नोषि ततोऽसि सर्वः।।४०।।

**सखेति मत्वा प्रसभं यद् उक्तं,**
**हे कृष्ण हे यादव हे सखेति।**

**अजानता महिमानं तवेदं,**
**मया प्रमादात् प्रणयेन वापि।।४१।।**

**यच् चावहासार्थम् असत्कृतोऽसि,**
**विहार-शय्यासन-भोजनेषु।**
**एकोऽथवाप्यच्युत तत्समक्षं,**
**तत् क्षामये त्वाम् अहम् अप्रमेयम्।।४२।।**

**पितासि लोकस्य चराचरस्य,**
**त्वम् अस्य पूज्यश्च गुरुर् गरीयान्।**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो,**
**लोकत्रयेऽप्यप्रतिम-प्रभाव।।४३।।**

**तस्मात् प्रणम्य प्रणिधाय कायं,**
**प्रसादये त्वाम् अहम् ईशम् ईड्यम्।**
**पितेव पुत्रस्य सखेव सख्युः,**
**प्रियः प्रियायार्हसि देव सोढुम्।।४४।।**

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा,**
**भयेन च प्रव्यथितं मनो मे।**
**तदेव मे दर्शय देव रूपं,**
**प्रसीद देवेश जगन्निवास।।४५।।**

**किरीटिनं गदिनं चक्रहस्तम्,**
**इच्छामि त्वां द्रष्टुम् अहं तथैव।**

**तेनैव रूपेण चतुर्भुजेन,**
**सहस्रबाहो भव विश्वमूर्ते।।४६।।**

## श्रीभगवान् उवाच

**मया प्रसन्नेन तवार्जुनेदं,**
**रूपं परं दर्शितम् आत्मयोगात्।**
**तेजोमयं विश्वम् अनन्तम् आद्यं,**
**यन् मे त्वदन्येन न दृष्टपूर्वम्।।४७।।**

**न वेद-यज्ञाध्ययनैर् न दानैर्,**
**न च क्रियाभिर् न तपोभिरुग्रैः।**
**एवंरूपः शक्य अहं नृलोके,**
**द्रष्टुं त्वदन्येन कुरुप्रवीर।।४८।।**

**मा ते व्यथा मा च विमूढभावो,**
**दृष्ट्वा रूपं घोरम् ईदृङ् ममेदम्।**
**व्यपेतभीः प्रीतमनाः पुनस् त्वं,**
**तदेव मे रूपम् इदं प्रपश्य।।४९।।**

## सञ्जय उवाच

**इत्यर्जुनं वासुदेवस् तथोक्त्वा,**
**स्वकं रूपं दर्शयामास भूयः।**
**आश्वासयामास च भीतम् एनं,**
**भूत्वा पुनः सौम्यवपुर् महात्मा।।५०।।**

## अर्जुन उवाच

दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन।
इदानीम् अस्मि संवृत्तः सचेताः प्रकृतिं गतः।।५१।।

## श्रीभगवान् उवाच

सुदुर्दर्शम् इदं रूपं दृष्टवान् असि यन् मम।
देवा अप्यस्य रूपस्य नित्यं दर्शन-काङ्क्षिणः।।५२।।

नाहं वेदैर् न तपसा न दानेन न चेज्यया।
शक्य एवंविधो द्रष्टुं दृष्ट्वान् असि मां यथा।।५३।।

भक्त्या त्वनन्यया शक्य अहम् एवंविधोऽर्जुन।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप।।५४।।

मत्कर्मकृन् मत्परमो मद्भक्तः सङ्गवर्जितः।
निर्वैरः सर्वभूतेषु यः स माम् एति पाण्डव।।५५।।

आदितः ४६८।।

ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः।।११।।

# अध्याय बारह

# भक्तियोग

### अर्जुन उवाच

एवं सततयुक्ता ये भक्तास् त्वां पर्युपासते।
ये चाप्यक्षरम् अव्यक्तं तेषां के योगवित्तमाः।।१।।

### श्रीभगवान् उवाच

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते।
श्रद्धया परयोपेतास् ते मे युक्ततमा मताः।।२।।

ये त्वक्षरम् अनिर्देश्यम् अव्यक्तं पर्युपासते।
सर्वत्रगम् अचिन्त्यं च कूटस्थम् अचलं ध्रुवम्।।३।।

सन्नियम्येन्द्रिय-ग्रामं सर्वत्र समबुद्धयः।
ते प्राप्नुवन्ति माम् एव सर्वभूतहिते रताः।।४।।

क्लेशोऽधिकतरस् तेषाम् अव्यक्तासक्त-चेतसाम्।
अव्यक्ता हि गतिर् दुःखं देहवद्भिर् अवाप्यते।।५।।

ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः।
अनन्येनैव योगेन मां ध्यायन्त उपासते।।६।।

**तेषाम् अहं समुद्धर्ता मृत्यु-संसार-सागरात्।**
**भवामि नचिरात् पार्थ मय्यावेशित-चेतसाम्।।७।।**

**मय्येव मन आधत्स्व मयि बुद्धिं निवेशय।**
**निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः।।८।।**

**अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्।**
**अभ्यास-योगेन ततो माम् इच्छाप्तुं धनञ्जय।।९।।**

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्म-परमो भव।**
**मदर्थम् अपि कर्माणि कुर्वन् सिद्धिम् अवाप्स्यसि।।१०।।**

**अथैतद् अप्यशक्तोऽसि कर्तुं मद्योगम् आश्रितः।**
**सर्व-कर्म-फल-त्यागं ततः कुरु यतात्मवान्।।११।।**

**श्रेयो हि ज्ञानम् अभ्यासाज् ज्ञानाद् ध्यानं विशिष्यते।**
**ध्यानात् कर्मफल-त्यागस् त्यागाच् छान्तिर् अनन्तरम्।।१२।।**

**अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च।**
**निर्ममो निरहङ्कारः समदुःखसुखः क्षमी।।१३।।**

**सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः।**
**मय्यर्पित-मनो-बुद्धिर् यो मद्-भक्तः स मे प्रियः।।१४।।**

**यस्मान् नोद्विजते लोको लोकान् नोद्विजते च यः।**
**हर्षामर्ष-भयोद्वेगैर् मुक्तो यः स च मे प्रियः।।१५।।**

**अनपेक्षः शुचिर् दक्ष उदासीनो गतव्यथः।**
**सर्वारम्भ-परित्यागी यो मद्भक्तः स मे प्रियः।।१६।।**

**यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति।**
**शुभाशुभ-परित्यागी भक्तिमान् यः स मे प्रियः।।१७।।**

**समः शत्रौ च मित्रे च तथा मानाप-मानयोः।**
**शीतोष्ण-सुख-दुःखेषु समः सङ्ग-विवर्जितः।।१८।।**

**तुल्य-निन्दा-स्तुतिर् मौनी सन्तुष्टो येन केनचित्।**
**अनिकेतः स्थिरमतिर् भक्तिमान् मे प्रियो नरः।।१९।।**

**ये तु धर्मामृतम् इदं यथोक्तं पर्युपासते।**
**श्रद्दधाना मत्परमा भक्तास् तेऽतीव मे प्रियाः।।२०।।**

**आदितः ४८८।।**

**ॐ तत् सद् इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे भक्तियोगो नाम द्वादशोऽध्यायः।।१२।।**

# अध्याय तेरह
# क्षेत्रक्षेत्रज्ञविभागयोग

## प्रकृति, पुरुष तथा चेतना

### अर्जुन उवाच

प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञम् एव च।
एतद् वेदितुम् इच्छामि ज्ञानं ज्ञेयं च केशव।।१।।

### श्रीभगवान् उवाच

इदं शरीरं कौन्तेय क्षेत्रम् इत्यभिधीयते।
एतद् यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः।।२।।

क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत।
क्षेत्र-क्षेत्रज्ञयोर् ज्ञानं यत् तज्ज्ञानं मतं मम।।३।।

तत् क्षेत्रं यच् च यादृक् च यद् विकारि यतश्च यत्।
स च यो यत्प्रभावश् च तत् समासेन मे शृणु।।४।।

ऋषिभिर् बहुधा गीतं छन्दोभिर् विविधैः पृथक्।
ब्रह्मसूत्र-पदैश् चैव हेतुमद्भिर् विनिश्चितैः।।५।।

महाभूतान्यहङ्कारो बुद्धिर् अव्यक्तम् एव च।
इन्द्रियाणि दशैकं च पञ्च चेन्द्रिय-गोचराः।।६।।

**इच्छा द्वेषः सुखं दुःखं सङ्घातश् चेतना धृतिः।**
**एतत् क्षेत्रं समासेन सविकारम् उदाहृतम्।।७।।**

**अमानित्वम् अदम्भित्वम् अहिंसा क्षान्तिर् आर्जवम्।**
**आचार्योपासनं शौचं स्थैर्यम् आत्मविनिग्रहः।।८।।**

**इन्द्रियार्थेषु वैराग्यम् अनहंकार एव च।**
**जन्म-मृत्यु-जरा-व्याधि-दुःख-दोषानुदर्शनम्।।९।।**

**असक्तिर् अनभिष्वङ्गः पुत्र-दार-गृहादिषु।**
**नित्यं च समचित्तत्वम् इष्टानिष्टोप-पत्तिषु।।१०।।**

**मयि चानन्य-योगेन भक्तिर् अव्यभिचारिणी।**
**विविक्त-देश-सेवित्वम् अरतिर् जनसंसदि।।११।।**

**अध्यात्म-ज्ञान-नित्यत्वं तत्त्व-ज्ञानार्थ-दर्शनम्।**
**एतज् ज्ञानम् इति प्रोक्तम् अज्ञानं यद् अतोऽन्यथा।।१२।।**

**ज्ञेयं यत् तत् प्रवक्ष्यामि यज् ज्ञात्वामृतम् अश्नुते।**
**अनादिमत् परं ब्रह्म न सत् तन्नासद् उच्यते।।१३।।**

**सर्वतः पाणि-पादं तत् सर्वतोऽक्षि-शिरो-मुखम्।**
**सर्वतः श्रुतिमल्लोके सर्वम् आवृत्य तिष्ठति।।१४।।**

**सर्वेन्द्रिय-गुणाभासं सर्वेन्द्रिय-विवर्जितम्।**
**असक्तं सर्वभृच् चैव निर्गुणं गुणभोक्तृ च।।१५।।**

**बहिर् अन्तश्च भूतानाम् अचरम् चरम् एव च।**
**सूक्ष्मत्वात् तद् अविज्ञेयं दूरस्थं चान्तिके च तत्।।१६।।**

**अविभक्तं च भूतेषु विभक्तम् इव च स्थितम्।**
**भूतभर्तृ च तज् ज्ञेयं ग्रसिष्णु प्रभविष्णु च।।१७।।**

**ज्योतिषाम् अपि तज्ज्योतिस् तमसः परम् उच्यते।**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य विष्ठितम्।।१८।।**

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः।**
**मद्भक्त एतद् विज्ञाय मद्भावायोप-पद्यते।।१९।।**

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश् चैव विद्धि प्रकृति-सम्भवान्।।२०।।**

**कार्य-कारण[१]-कर्तृत्वे हेतुः प्रकृतिर् उच्यते।**
**पुरुषः सुख-दुःखानां भोक्तृत्वे हेतुर् उच्यते।।२१।।**

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृति-जान् गुणान्।**
**कारणं गुण-सङ्गोऽस्य सद् - असद् - योनि-जन्मसु।।२२।।**

**उपद्रष्टानु-मन्ता च भर्ता भोक्ता महेश्वरः।**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः।।२३।।**

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभि-जायते।।२४।।**

**ध्यानेनात्मनि पश्यन्ति केचिद् आत्मानम् आत्मना।**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे।।२५।।**

---

१. पा० भे०-करण।

**अन्ये त्वेवम् अजानन्तः श्रुत्वान्येभ्य उपासते।**
**तेऽपि चाति-तरन्त्येव मृत्युं श्रुति-परायणाः।।२६।।**

**यावत् सञ्जायते किञ्चित् सत्त्वं स्थावर-जङ्गमम्।**
**क्षेत्र-क्षेत्रज्ञ-संयोगात् तद् विद्धि भरतर्षभ।।२७।।**

**समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्।**
**विनश्यत्स्व्-अविनश्यन्तं यः पश्यति स पश्यति।।२८।।**

**समं पश्यन् हि सर्वत्र समवस्थितम् ईश्वरम्।**
**न हिनस्त्यात्मनात्मानं ततो याति परां गतिम्।।२९।।**

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।**
**यः पश्यति तथात्मानम् अकर्तारं स पश्यति।।३०।।**

**यदा भूतपृथग्भावम् एकस्थम् अनुपश्यति।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा।।३१।।**

**अनादित्वान् निर्गुणत्वात् परमात्मायम् अव्ययः।**
**शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते।।३२।।**

**यथा सर्वगतं सौक्ष्म्याद् आकाशं नोपलिप्यते।**
**सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते।।३३।।**

**यथा प्रकाशयत्येकः कृत्स्नं लोकम् इमं रविः।**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत।।३४।।**

**क्षेत्र-क्षेत्रज्ञयोर् एवम् अन्तरं ज्ञानचक्षुषा।**

**भूतप्रकृति-मोक्षं च ये विदुर् यान्ति ते परम्।।३५।।**

**आदितः ५२३।।**

**ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-संवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः।।१३।।**

## अध्याय चौदह

# गुणत्रयविभागयोग

## प्रकृति के तीन गुण

### श्रीभगवान् उवाच

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानम् उत्तमम्।
यज् ज्ञात्वा मुनयः सर्वे परां सिद्धिम् इतो गताः।।१।।

इदं ज्ञानम् उपाश्रित्य मम साधर्म्यम् आगताः।
सर्गेऽपि नोप-जायन्ते प्रलये न व्यथन्ति च।।२।।

मम योनिर् महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्।
सम्भवः सर्व-भूतानां ततो भवति भारत।।३।।

सर्व-योनिषु कौन्तेय मूर्तयः सम्भवन्ति याः।
तासां ब्रह्म महद्योनिर् अहं बीज-प्रदः पिता।।४।।

सत्त्वं रजस् तम इति गुणाः प्रकृति-सम्भवाः।
निबध्नन्ति महाबाहो देहे देहिनम् अव्ययम्।।५।।

तत्र सत्त्वं निर्मलत्वात् प्रकाशकम् अनामयम्।
सुख-सङ्गेन बध्नाति ज्ञान-सङ्गेन चानघ।।६।।

रजो रागात्मकं विद्धि तृष्णा-सङ्ग-समुद्भवम्।

तन् निबध्नाति कौन्तेय कर्म-सङ्गेन देहिनम्।।७।।

तमस् त्वज्ञानजं विद्धि मोहनं सर्व-देहिनाम्।
प्रमादालस्य-निद्राभिस् तन् निबध्नाति भारत।।८।।

सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत।
ज्ञानम् आवृत्य तु तमः प्रमादे सञ्जयत्युत।।९।।

रजस् तमश् चाभिभूय सत्त्वं भवति भारत।
रजः सत्त्वं तमश् चैव तमः सत्त्वं रजस् तथा।।१०।।

सर्व-द्वारेषु देहेऽस्मिन् प्रकाश उपजायते।
ज्ञानं यदा तदा विद्याद् विवृद्धं सत्त्वम् इत्युत।।११।।

लोभः प्रवृत्तिर् आरम्भः कर्मणाम् अशमः स्पृहा।
रजस्येतानि जायन्ते विवृद्धे भरतर्षभ।।१२।।

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च।
तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन।।१३।।

यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत्।
तदोत्तम-विदां लोकान् अमलान् प्रतिपद्यते।।१४।।

रजसि प्रलयं गत्वा कर्म-सङ्गिषु जायते।
तथा प्रलीनस् तमसि मूढ-योनिषु जायते।।१५।।

कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम्।
रजसस्तु फलं दुःखम् अज्ञानं तमसः फलम्।।१६।।

सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च।

**प्रमाद-मोहौ तमसो भवतोऽज्ञानम् एव च।।१७।।**

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः।**
**जघन्य-गुण-वृत्तिस्था अधो गच्छन्ति तामसाः।।१८।।**

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानु-पश्यति।**
**गुणेभ्यश् च परं वेत्ति मद्भावं सोऽधिगच्छति।।१९।।**

**गुणान् एतान् अतीत्य त्रीन् देही देह-समुद्भवान्।**
**जन्म-मृत्यु-जरा-दुःखैर् विमुक्तोऽमृतम् अश्नुते।।२०।।**

## अर्जुन उवाच

**कैर् लिङ्गैस् त्रीन् गुणान् एतान् अतीतो भवति प्रभो।**
**किम् - आचारः कथं चैतांस् त्रीन् गुणान् अतिवर्तते।।२१।।**

## श्रीभगवान् उवाच

**प्रकाशं च प्रवृत्तिं च मोहम् एव च पाण्डव।**
**ने द्वेष्टि सम्प्रवृत्तानि न निवृत्तानि काङ्क्षति।।२२।।**

**उदासीन-वद् आसीनो गुणैर् यो न विचाल्यते।**
**गुणा वर्तन्त इत्येवं[१] योऽवतिष्ठति नेङ्गते।।२३।।**

**सम-दुःख-सुखः स्वस्थः सम-लोष्टाश्म-काञ्चनः।**
**तुल्य-प्रियाप्रियो धीरस् तुल्य-निन्दात्म-संस्तुतिः।।२४।।**

---

१. पा० भे०-इत्येव।

**मानापमानयोस् तुल्यस् तुल्यो मित्रारि-पक्षयोः।**
**सर्वारम्भ-परित्यागी गुणातीतः स उच्यते।।२५।।**

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते।**
**स गुणान् समतीत्यैतान् ब्रह्मभूयाय कल्पते।।२६।।**

**ब्रह्मणो हि प्रतिष्ठाहम् अमृतस्याव्ययस्य च।**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च।।२७।।**

**आदितः ५५०।।**

**ॐ तत्सदिति श्रीमद्भवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः।।१४।।**

# अध्याय पन्द्रह

# पुरुषोत्तमयोग

### श्रीभगवान् उवाच

ऊर्ध्व-मूलम् अधःशाखम् अश्वत्थं प्राहुर् अव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्।।१।।

अधश् चोर्ध्वं प्रसृतास् तस्य शाखा
गुण-प्रवृद्धा विषय-प्रवालाः।
अधश्च मूलान्यनु-सन्ततानि
कर्मानु-बन्धीनि मनुष्य-लोके।।२।।

न रूपम् अस्येह तथोप-लभ्यते
नान्तो न चादिर् न च सम्प्रतिष्ठा।
अश्वत्थम् एनं सुविरूढ-मूलम्
असङ्ग-शस्त्रेण दृढेन छित्त्वा।।३।।

ततः पदं तत् परि-मार्गितव्यं
यस्मिन् गता न निवर्तन्ति भूयः।
तम् एव चाद्यं पुरुषं प्रपद्ये
यतः प्रवृत्तिः प्रसृता पुराणी।।४।।

निर्मान-मोहा जित-सङ्ग-दोषा

**अध्यात्म-नित्या विनिवृत्त-कामाः।**
**द्वन्द्वैर् विमुक्ताः सुख-दुःख-संज्ञैर्**
**गच्छन्त्यमूढाः पदम् अव्ययं तत्।।५।।**

**न तद् भासयते सूर्यो न शशाङ्को न पावकः।**
**यद् गत्वा न निवर्तन्ते तद् धाम परमं मम।।६।।**

**ममैवांशो जीवलोके जीवभूतः सनातनः।**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति।।७।।**

**शरीरं यद् अवाप्नोति यच् चाप्युत्क्रामतीश्वरः।**
**गृहीत्वैतानि संयाति वायुर् गन्धान् इवाशयात्।।८।।**

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणम् एव च।**
**अधिष्ठाय मनश् चायं विषयान् उपसेवते।।९।।**

**उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।**
**विमूढा नानुपश्यन्ति पश्यन्ति ज्ञान-चक्षुषः।।१०।।**

**यतन्तो योगिनश् चैनं पश्यन्त्यात्मन्यवस्थितम्।**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः।।११।।**

**यद् आदित्य-गतं तेजो जगद् भासयतेऽखिलम्।**
**यच् चन्द्रमसि यच् चाग्नौ तत् तेजो विद्धि मामकम्।।१२।।**

**गाम् आविश्य च भूतानि धारयाम्यहम् ओजसा।**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः।।१३।।**

**अहं वैश्वानरो भूत्वा प्राणिनां देहम् आश्रितः।**

**प्राणापान-समायुक्तः पचाम्यन्नं चतुर्विधम्।।१४।।**

**सर्वस्य चाहं हृदि सन्निविष्टो**
**मत्तः स्मृतिर् ज्ञानम् अपोहनं च।**
**वेदैश्च सर्वैर् अहम् एव वेद्यो**
**वेदान्तकृद् वेदविद् एव चाहम्।।१५।।**

**द्वाविमौ पुरुषौ लोके क्षरश् चाक्षर एव च।**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।।१६।।**

**उत्तमः पुरुषस् त्वन्यः परमात्मेत्युदाहृतः।**
**यो लोकत्रयम् आविश्य बिभर्त्यव्यय ईश्वरः।।१७।।**

**यस्मात् क्षरम् अतीतोऽहम् अक्षराद् अपि चोत्तमः।**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।।१८।।**

**यो माम् एवम् असम्मूढो जानाति पुरुषोत्तमम्।**
**स सर्वविद् भजति मां सर्वभावेन भारत।।१९।।**

**इति गुह्यतमं शास्त्रम् इदम् उक्तं मयानघ।**
**एतद् बुद्ध्वा बुद्धिमान् स्यात् कृत-कृत्यश् च भारत।।२०।।**

**आदितः ५७०।।**

**ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः।।१५।।**

# अध्याय सोलह

# दैवासुर-सम्पद्-विभागयोग

## दैवी तथा आसुरी स्वभाव

### श्रीभगवान् उवाच

अभयं सत्त्व-संशुद्धिर् ज्ञान-योग-व्यवस्थितिः।
दानं दमश्च यज्ञश्च स्वाध्यायस् तप आर्जवम्।।१।।

अहिंसा सत्यम् अक्रोधस् त्यागः शान्तिर् अपैशुनम्।
दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीर् अचापलम्।।२।।

तेजःक्षमा धृतिः शौचम् अद्रोहो नातिमानिता।
भवन्ति सम्पदं दैवीम् अभिजातस्य भारत।।३।।

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यम् एव च।
अज्ञानं चाभिजातस्य पार्थ सम्पदम् आसुरीम्।।४।।

दैवी सम्पद् विमोक्षाय निबन्धायासुरी मता।
मा शुचः सम्पदं दैवीम् अभिजातोऽसि पाण्डव।।५।।

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च।
दैवो विस्तरशः प्रोक्त आसुरं पार्थ मे शृणु।।६।।

प्रवृत्तिं च निवृत्तिं च जना न विदुर् आसुराः।

न शौचं नापि चाचारो न सत्यं तेषु विद्यते॥७॥

असत्यम् अप्रतिष्ठं ते जगद् आहुर् अनीश्वरम्।
अपरस्पर-सम्भूतं किम्-अन्यत् काम-हैतुकम्॥८॥

एतां दृष्टिम् अवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः॥९॥

कामम् आश्रित्य दुष्पूरं दम्भ-मान-मदान्विताः।
मोहाद् गृहीत्वासद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः॥१०॥

चिन्ताम् अपरिमेयां च प्रलयान्ताम् उपाश्रिताः।
कामोपभोग-परमा एतावद् इति निश्चिताः॥११॥

आशा-पाश-शतैर् बद्धाः काम-क्रोध-परायणाः।
ईहन्ते काम-भोगार्थम् अन्यायेनार्थ-सञ्चयान्॥१२॥

इदम् अद्य मया लब्धम् इमं प्राप्स्ये मनोरथम्।
इदम् अस्तीदम् अपि मे भविष्यति पुनर् धनम्॥१३॥

असौ मया हतः शत्रुर् हनिष्ये चापरान् अपि।
ईश्वरोऽहम् अहं भोगी सिद्धोऽहम् बलवान् सुखी॥१४॥

आढ्यो ऽभिजनवान् अस्मि कोऽन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञान-विमोहिताः॥१५॥

अनेक-चित्त-विभ्रान्ता मोह-जाल-समावृताः।
प्रसक्ताः काम-भोगेषु पतन्ति नरकेऽशुचौ॥१६॥

आत्म-सम्भाविताः स्तब्धा धन-मान-मदान्विताः।

**यजन्ते नाम-यज्ञैस् ते दम्भेनाविधि-पूर्वकम्।।१७।।**

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः।**
**माम् आत्म-पर-देहेषु प्रद्विषन्तोऽभ्यसूयकाः।।१८।।**

**तान् अहं द्विषतः क्रूरान् संसारेषु नराधमान्।**
**क्षिपाम्यजस्रम् अशुभान् आसुरीष्वेव योनिषु।।१९।।**

**आसुरीं योनिम् आपन्ना मूढा जन्मनि जन्मनि।**
**माम् अप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्।।२०।।**

**त्रिविधं नरकस्येदं द्वारं नाशनम् आत्मनः।**
**कामः क्रोधस् तथा लोभस् तस्माद् एतत् त्रयं त्यजेत्।।२१।।**

**एतैर् विमुक्तः कौन्तेय तमो द्वारैस् त्रिभिर् नरः।**
**आचरत्यात्मनः श्रेयस् ततो याति परां गतिम्।।२२।।**

**यः शास्त्र-विधिम् उत्सृज्य वर्तते काम-कारतः।**
**न स सिद्धिम् अवाप्नोति न सुखं न परां गतिम्।।२३।।**

**तस्माच् छास्त्रं प्रमाणं ते कार्याकार्य-व्यवस्थितौ।**
**ज्ञात्वा शास्त्र-विधानोक्तं कर्म कर्तुम् इहार्हसि।।२४।।**

**आदितः ५९४।।**

ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु, ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे दैवासुरसम्पद्विभागयोगो नाम षोडशोऽध्यायः।।१६।।

## अध्याय सत्रह

# श्रद्धा-त्रय-विभागयोग

## श्रद्धा के विभाग

### अर्जुन उवाच

ये शास्त्र-विधिम् उत्सृज्य यजन्ते श्रद्धयान्विताः।
तेषां निष्ठा तु का कृष्ण सत्त्वम् आहो रजस् तमः।।१।।

### श्रीभगवान् उवाच

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा।
सात्त्विकी राजसी चैव तामसी चेति तां शृणु।।२।।

सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धा-मयोऽयं पुरुषो यो यच् - छ्रद्धः स एव सः।।३।।

यजन्ते सात्त्विका देवान् यक्ष-रक्षांसि राजसाः।
प्रेतान् भूतगणांश् चान्ये यजन्ते तामसा जनाः।।४।।

अशास्त्र-विहितं घोरं तप्यन्ते ये तपो जनाः।
दम्भाहङ्कार-संयुक्ताः काम-राग-बलान्विताः।।५।।

कर्षयन्तः शरीरस्थं भूतग्रामम् अचेतसः।

**मां चैवान्तः शरीरस्थं तान् विद्ध्यासुर-निश्चयान्।।६।।**

**आहारस् त्वपि सर्वस्य त्रिविधो भवति प्रियः।**
**यज्ञस् तपस् तथा दानं तेषां भेदम् इमं शृणु।।७।।**

**आयुः-सत्त्व-बलारोग्य-सुख-प्रीतिविवर्धनाः।**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विक-प्रियाः।।८।।**

**कट्वम्ल-लवणात्युष्ण-तीक्ष्ण-रूक्ष-विदाहिनः।**
**आहारा राजसस्येष्टा दुःख-शोकामय-प्रदाः।।९।।**

**यातयामं गतरसं पूति पर्युषितं च यत्।**
**उच्छिष्टम् अपि चामेध्यं भोजनं तामस-प्रियम्।।१०।।**

**अफलाकाङ्क्षिभिर् यज्ञो विधि-दिष्टो[१] य इज्यते।**
**यष्टव्यम् एवेति मनः समाधाय स सात्त्विकः।।११।।**

**अभिसन्धाय तु फलं दम्भार्थम् अपि चैव यत्।**
**इज्यते भरतश्रेष्ठ तं यज्ञं विद्धि राजसम्।।१२।।**

**विधिहीनम् असृष्टान्नं मन्त्रहीनम् अदक्षिणम्।।**
**श्रद्धा-विरहितं यज्ञं तामसं परिचक्षते।।१३।।**

**देव-द्विज-गुरु-प्राज्ञ-पूजनं शौचम् आर्जवम्।**
**ब्रह्मचर्यम् अहिंसा च शारीरं तप उच्यते।।१४।।**

**अनुद्वेग-करं वाक्यं सत्यं प्रियहितं च यत्।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते।।१५।।**

---

१. पाठभेद-विधिदृष्टो

**मनः-प्रसादः सौम्यत्वं मौनम् आत्म-विनिग्रहः।**
**भाव-संशुद्धिर् इत्येतत् तपो मानसम् उच्यते।।१६।।**

**श्रद्धया परया तप्तं तपस् तत् त्रिविधं नरैः।**
**अफलाकाङ्क्षिभिर् युक्तैः सात्त्विकं परिचक्षते।।१७।।**

**सत्कार-मान-पूजार्थं तपो दम्भेन चैव यत्।**
**क्रियते तदिह प्रोक्तं राजसं चलम् अध्रुवम्।।१८।।**

**मूढग्राहेणात्मनो यत् पीडया क्रियते तपः।**
**परस्योत्सादनार्थं वा तत् तामसम् उदाहृतम्।।१९।।**

**दातव्यम् इति यद् दानं दीयतेऽनुपकारिणे।**
**देशे काले च पात्रे च तद् दानं सात्त्विकं स्मृतम्।।२०।।**

**यत् तु प्रत्युपकारार्थं फलम् उद्दिश्य वा पुनः।**
**दीयते च परिक्लिष्टं तद् दानं राजसं स्मृतम्।।२१।।**

**अदेशकाले यद् दानम् अपात्रेभ्यश् च दीयते।**
**असत्कृतम् अवज्ञातं तत् तामसम् उदाहृतम्।।२२।।**

**ॐ तत् सद् इति निर्देशो ब्रह्मणस् त्रिविधः स्मृतः।**
**ब्राह्मणास् तेन वेदाश् च यज्ञाश्च विहिताः पुरा।।२३।।**

**तस्माद् ॐ इत्युदाहृत्य यज्ञ-दान-तपः-क्रियाः।**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्म-वादिनाम्।।२४।।**

**तद् इत्यनभि-सन्धाय फलं यज्ञ-तपः-क्रियाः।**
**दान-क्रियाश् च विविधाः क्रियन्ते मोक्ष-काङ्क्षिभिः।।२५।।**

**सद्भावे साधुभावे च सद् इत्येतत् प्रयुज्यते।**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते।।२६।।**

**यज्ञे तपसि दाने च स्थितिः सद् इति चोच्यते।**
**कर्म चैव तदर्थीयं सद् इत्येवाभि-धीयते।।२७।।**

**अश्रद्धया हुतं दत्तं तपस् तप्तं कृतं च यत्।**
**असद् इत्युच्यते पार्थ न च तत् प्रेत्य नो इह।।२८।।**

**आदितः ६२२।।**

**ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे श्रद्धात्रयविभागयोगो नाम सप्तदशोऽध्यायः।।१७।।**

## अध्याय अठारह

# मोक्ष-संन्यास-योग

## उपसंहार-संन्यास की सिद्धि

### अर्जुन उवाच

संन्यासस्य महाबाहो तत्त्वम् इच्छामि वेदितुम्।
त्यागस्य च हृषीकेश पृथक् केशिनिषूदन।।१।।

### श्रीभगवान् उवाच

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्व-कर्म-फल-त्यागं प्राहुस् त्यागं विचक्षणाः।।२।।

त्याज्यं दोषवद् इत्येके कर्म प्राहुर् मनीषिणः।
यज्ञ-दान-तपः-कर्म न त्याज्यम् इति चापरे।।३।।

निश्चयं शृणु मे तत्र त्यागे भरतसत्तम।
त्यागो हि पुरुषव्याघ्र त्रिविधः सम्प्रकीर्तितः।।४।।

यज्ञ-दान-तपः-कर्म न त्याज्यं कार्यम् एव तत्।
यज्ञो दानं तपश् चैव पावनानि मनीषिणाम्।।५।।

**एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च।**
**कर्तव्यानीति मे पार्थ निश्चितं मतम् उत्तमम्।।६।।**

**नियतस्य तु संन्यासः कर्मणो नोपपद्यते।**
**मोहात् तस्य परित्यागस् तामसः परिकीर्तितः।७।।**

**दुःखम् इत्येव यत् कर्म काय-क्लेश-भयात् त्यजेत्।**
**स कृत्वा राजसं त्यागं नैव त्याग-फलं लभेत्।।८।।**

**कार्यम् इत्येव यत् कर्म नियतं क्रियतेऽर्जुन।**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः।।९।।**

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते।**
**त्यागी सत्त्व-समाविष्टो मेधावी छिन्न-संशयः।।१०।।**

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः।**
**यस्तु कर्म-फल-त्यागी स त्यागीत्यभि-धीयते।।११।।**

**अनिष्टम् इष्टम् मिश्रं च त्रिविधं कर्मणः फलम्।**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित्।।१२।।**

**पञ्चैतानि महाबाहो कारणानि निबोध मे।**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्व-कर्मणाम्।।१३।।**

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम्।**
**विविधाश् च पृथक् चेष्टा दैवं चैवात्र पञ्चमम्।।१४।।**

**शरीर-वाङ्-मनोभिर् यत् कर्म प्रारभते नरः।**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः।।१५।।**

तत्रैवं सति कर्तारम् आत्मानं केवलं तु यः।
पश्यत्यकृत-बुद्धित्वान् न स पश्यति दुर्मतिः।।१६।।

यस्य नाहङ्कृतो भावो बुद्धिर् यस्य न लिप्यते।
हत्वापि स इमाँल् लोकान् न हन्ति न निबध्यते।।१७।।

ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्म-चोदना।
करणं कर्म कर्तेति त्रिविधः कर्म-संग्रहः।।१८।।

ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः।
प्रोच्यते गुण-संख्याने यथावच् छृणु तान्यपि।।१९।।

सर्व-भूतेषु येनैकं भावम् अव्ययम् ईक्षते।
अविभक्तं विभक्तेषु तज् ज्ञानं विद्धि सात्त्विकम्।।२०।।

पृथक्त्वेन तु यज् ज्ञानं नाना-भावान् पृथग् - विधान्।
वेत्ति सर्वेषु भूतेषु तज् ज्ञानं विद्धि राजसम्।।२१।।

यत् तु कृत्स्नवद् एकस्मिन् कार्ये सक्तम् अहैतुकम्।
अतत्त्वार्थ-वद् अल्पं च तत् तामसम् उदाहृतम्।।२२।।

नियतं सङ्ग-रहितम् अराग-द्वेषतः कृतम्।
अफल-प्रेप्सुना कर्म यत् तत् सात्त्विकम् उच्यते।।२३।।

यत् तु कामेप्सुना कर्म साहङ्कारेण वा पुनः।
क्रियते बहुलायासं तद् राजसम् उदाहृतम्।।२४।।

अनुबन्धं क्षयं हिंसाम् अनपेक्ष्य च पौरुषम्।
मोहाद् आरभ्यते कर्म यत् तत् तामसम् उच्यते।।२५।।

मुक्त-सङ्गोऽनहंवादी धृत्युत्साह-समन्वितः।
सिद्ध्यसिद्ध्योर् निर्विकारः कर्ता सात्त्विक उच्यते।।२६।।

रागी कर्म-फल-प्रेप्सुर् लुब्धो हिंसात्मकोऽशुचिः।
हर्ष-शोकान्वितः कर्ता राजसः परि-कीर्तितः।।२७।।

अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः।
विषादी दीर्घसूत्री च कर्ता तामस उच्यते।।२८।।

बुद्धेर् भेदं धृतेश् चैव गुणतस् त्रिविधं शृणु।
प्रोच्यमानम् अशेषेण पृथक्त्वेन धनञ्जय।।२९।।

प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी।।३०।।

यया धर्मम् अधर्मं च कार्यं चाकार्यम् एव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी।।३१।।

अधर्मं धर्मम् इति या मन्यते तमसावृता।
सर्वार्थान् विपरीतांश् च बुद्धिः सा पार्थ तामसी।।३२।।

धृत्या यया धारयते मनः प्राणेन्द्रिय-क्रियाः।
योगेनाव्यभिचारिण्या धृतिः सा पार्थ सात्त्विकी।।३३।।

यया तु धर्म-कामार्थान् धृत्या धारयते ऽर्जुन।
प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ राजसी।।३४।।

यया स्वप्नं भयं शोकं विषादं मदम् एव च।
न विमुञ्चति दुर्मेधा धृतिः सा पार्थ तामसी।।३५।।

सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ।
अभ्यासाद् रमते यत्र दुःखान्तं च निगच्छति।।३६।।

यत् तद् अग्रे विषमिव परिणामेऽमृतोपमम्।
तत् सुखं सात्त्विकं प्रोक्तम् आत्म-बुद्धि-प्रसादजम्।।३७।।

विषयेन्द्रिय-संयोगाद् यत् तद् अग्रे ऽमृतोपमम्।
परिणामे विषमिव तत् सुखं राजसं स्मृतम्।।३८।।

यद् अग्रे चानुबन्धे च सुखं मोहनम् आत्मनः।
निद्रालस्य-प्रमादोत्थं तत् तामसम् उदाहृतम्।।३९।।

न तद् अस्ति पृथिव्यां वा दिवि देवेषु वा पुनः।
सत्त्वं प्रकृतिजैर् मुक्तं यद् एभिः स्यात् त्रिभिर् गुणैः।।४०।।

ब्राह्मण-क्षत्रिय-विशां शूद्राणां च परन्तप।
कर्माणि प्रविभक्तानि स्वभाव-प्रभवैर् गुणैः।।४१।।

शमो दमस् तपः शौचं क्षान्तिर् आर्जवम् एव च।
ज्ञानं विज्ञानम् आस्तिक्यं ब्रह्मकर्म स्वभावजम्।।४२।।

शौर्यं तेजो धृतिर् दाक्ष्यं युद्धे चाप्यपलायनम्।
दानम् ईश्वर-भावश्च क्षात्रं कर्म स्वभावजम्।।४३।।

कृषि-गोरक्ष्य-वाणिज्यं वैश्य-कर्म स्वभावजम्।।
परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्।।४४।।

स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।
स्वकर्म-निरतः सिद्धिं यथा विन्दति तच् छृणु।।४५।।

यतः प्रवृत्तिर् भूतानां येन सर्वम् इदं ततम्।
स्वकर्मणा तम् अभ्यर्च्य सिद्धिं विन्दति मानवः।।४६।।

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वभाव-नियतं कर्म कुर्वन्-नाप्नोति किल्बिषम्।।४७।।

सहजं कर्म कौन्तेय सदोषम् अपि न त्यजेत्।
सर्वारम्भा हि दोषेण धूमेनाग्निर् इवावृताः।।४८।।

असक्त-बुद्धिः सर्वत्र जितात्मा विगत-स्पृहः।
नैष्कर्म्य-सिद्धिं परमां संन्यासेनाधि-गच्छति।।४९।।

सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे।
समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा।।५०।।

बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च।
शब्दादीन् विषयांस् त्यक्त्वा राग-द्वेषौ व्युदस्य च।।५१।।

विविक्त-सेवी लध्वाशी यतवाक्-काय-मानसः।
ध्यान-योग-परो नित्यं वैराग्यं समुपाश्रितः।।५२।।

अहङ्कारं बलं दर्पं कामं क्रोधं परिग्रहम्।
विमुच्य निर्ममः शान्तो ब्रह्म-भूयाय कल्पते।।५३।।

ब्रह्म-भूतः प्रसन्नात्मा न शोचति न काङ्क्षति।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।।५४।।

भक्त्या माम् अभिजानाति यावान् यश् चास्मि तत्त्वतः।
ततो मां तत्त्वतो ज्ञात्वा विशते तद् - अनन्तरम्।।५५।।

सर्व-कर्माण्यपि सदा कुर्वाणो मद्-व्यपाश्रयः।
मत्प्रसादाद् अवाप्नोति शाश्वतं पदम् अव्ययम्।।५६।।

चेतसा सर्व-कर्माणि मयि संन्यस्य मत्परः।
बुद्धियोगम् उपाश्रित्य मच्चित्तः सततं भव।।५७।।

मच्चित्तः सर्वदुर्गाणि मत्प्रसादात् तरिष्यसि।
अथ चेत् त्वम् अहङ्कारान् न श्रोष्यसि विनङ्क्ष्यसि।।५८।।

यद् अहङ्कारम् आश्रित्य न योत्स्य इति मन्यसे।
मिथ्यैष व्यवसायस् ते प्रकृतिस् त्वां नियोक्ष्यति।।५९।।

स्वभावजेन कौन्तेय निबद्धः स्वेन कर्मणा।
कर्तुं नेच्छसि यन् मोहात् करिष्यस्यवशोऽपि तत्।।६०।।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया।।६१।।

तमेव शरणं गच्छ सर्व-भावेन भारत।
तत्प्रसादात् परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम्।।६२।।

इति ते ज्ञानम् आख्यातं गुह्याद् गुह्यतरं मया।
विमृश्यैतद् अशेषेण यथेच्छसि तथा कुरु।।६३।।

सर्व-गुह्य-तमं भूयः शृणु मे परमं वचः।
इष्टोऽसि मे दृढम् इति ततो वक्ष्यामि ते हितम्।।६४।।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
माम् एवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे।।६५।।

**सर्वधर्मान् परित्यज्य माम् एकं शरणं व्रज।**
**अहं त्वां[1] सर्व-पापेभ्यो मोक्षयिष्यामि मा शुचः।।६६।।**

**इदं ते नातपस्काय नाभक्ताय कदाचन।**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति।।६७।।**

**य इदं परमं गुह्यं मद्भक्तेष्वभि-धास्यति।**
**भक्तिं मयि परां कृत्वा माम् एवैष्यत्यसंशयः।।६८।।**

**न च तस्मान् मनुष्येषु कश्चिन् मे प्रिय-कृत्तमः।**
**भविता न च मे तस्माद् अन्यः प्रियतरो भुवि।।६९।।**

**अध्येष्यते च य इमं धर्म्यं संवादम् आवयोः।**
**ज्ञान-यज्ञेन तेनाहम् इष्टः स्याम् इति मे मतिः।।७०।।**

**श्रद्धावान् अनसूयश् च शृणुयाद् अपि यो नरः।**
**सोऽपि मुक्तः शुभाँल् लोकान् प्राप्नुयात् पुण्य-कर्मणाम्।।७१।।**

**कच्चिद् एतच् छ्रुतं पार्थ त्वयैकाग्रेण चेतसा।**
**कच्चिद् अज्ञान-सम्मोहः प्रणष्टस् ते धनञ्जय।।७२।।**

## अर्जुन उवाच

**नष्टो मोहः स्मृतिर् लब्धा त्वत्प्रसादान् मयाच्युत।**
**स्थितोऽस्मि गत-सन्देहः करिष्ये वचनं तव।।७३।।**

---

१. पा० भे०-त्वा।

## सञ्जय उवाच

**इत्यहं वासुदेवस्य पार्थस्य च महात्मनः।**
**संवादम् इमम् अश्रौषम् अद्भुतं रोमहर्षणम्।।७४।।**

**व्यास-प्रसादाच् छ्रुतवान् एतद् गुह्यम् अहं परम्।**
**योगं योगेश्वरात् कृष्णात् साक्षात् कथयतः स्वयम्।।७५।।**

**राजन् संस्मृत्य संस्मृत्य संवादम् इमम् अद्भुतम्।**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः।।७६।।**

**तच्च संस्मृत्य संस्मृत्य रूपम् अत्यद्भुतं हरेः।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः।।७७।।**

**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।**
**तत्र श्रीर् विजयो भूतिर् ध्रुवा नीतिर् मतिर् मम।।७८।।**

**आदितः ७००।।**

**ॐ तत्सदिति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षसंन्यासयोगो नामाष्टादशोऽध्यायः।।१८।।**